।। शिवाभ्यां नमः ।।

# ।। दोषपरिहाराष्टकम् ।।

अन्यस्य दोषगणना कुतुकं ममैतत्
आविष्करोति नियतं मयि दोषवत्त्वम्।
दोषः पुनर्मयि न चेदखिले सतीशे
दोषग्रहः कथमुदेतु ममेश तस्मिन्।। १

एषा व्यथेतरकृतेति ममेश तस्मिन्
कोपो यदि स्वपरकाममुख प्रसूता।
सेयं व्यथेति मयि मे न कथन्नु कोपः
स्वस्य व्यथा स्वदुरितप्रभवा हि सर्वा।। २

कामप्रभृत्यखिल दोषनिधेर्ममैष
मय्याह दोषमिति को नु दुराग्रहोऽस्मिन्।
हेयत्वमालपति योऽयमलं न केन
वार्योऽथ सत्ववति सोऽयमसत् किमाह।। ३

यस्संश्रितः स्वहितधीर्व्यसनातुरस्तत्
दोषस्य तं प्रति वचोऽस्तु तदन्यदोषं।
यद्वच्मि तन्मम न किं क्षतये स्वदोष-
चिन्तैव मे तदपनोदफलोचितातः।। ४

दोषं परस्य ननु गृह्णति मय्यनेन
स्वात्मैष एव परगात्रसमाहृतेन।
दुर्वस्तुनेव मलिनीक्रियते तदन्य-
दोषग्रहादहह किं न निवर्तितव्यम्।। ५

निर्दोषभावमितरस्य सदोषभावं
स्वस्यापि संविदधती परदोषधीर्मे।
आस्तामियं तदितरा तु परार्तिमात्र-
हेतुर्व्यनक्तु न कथं मम तुच्छभावम्।। ६

पद्मादिसौरभ इव भ्रमरस्य हर्षं
हित्वान्यदीयसुगुणे पुनरन्यदोषे।

हर्षो दुरर्थ इव गेहकिटेः किमास्ते

हा मे कदेश कृपया विगळेत्स एषः।। ७

दोषे स्वभाजि मतिकौशलमन्यभाजि

मौढ्यं गुणेऽन्यजुषि हर्षभरः स्वभाजि।

अस्तप्रसक्तिरखिलेषु दयात्युदार-

वृत्त्योर्जितो मम कदास्तु हरानुरागः।। ८

।। इति श्री श्रीधरवेङ्कटेशार्य कृत दोषपरिहाराष्टकं सम्पूर्णम् ।।